॥ श्री ॥
अथ श्री त्रिविक्रमपंडिताचार्यसुत श्री नारायणपंडिताचार्यविरचितः
॥ श्री मध्वविजयः ॥

९. नवमः सर्गः
चोदयंतमथ गंतुमादरात् तत्र धर्मजमजं प्रणम्य सः ।
सौख्यतीर्थकविलोकनायको वेदनायकपुरस्सरो ययौ ॥ ९.१ ॥

आश्रमांतरमवाप्य कृष्णतः श्राव्यमेष सकलं च शुश्रुवान् ।
चित्तवृत्तिमनुवृत्तिमान् गुरोः साध्ववेत्य गमनोन्मुखोऽभवत् ॥ ९.२ ॥

मंदहासमृदुसुंदराननं वंदनीयमभिवंद्य सत्पतिम् ।
प्राज्ञमौलिमणिरभ्यनुज्ञया तस्य तावदगमन्महामतिः ॥ ९.३ ॥

तस्य वल्लभतमाऽऽस वासभूः मानसात् पृथुलमानसस्य नो ।
नात्यजत् क्षणमपि ह्यसाविदं नैष नाथविरही ततोऽभवत् ॥ ९.४ ॥

वीरदृष्टिकृतसिंहविभ्रमः शांतदृष्टिकृतशांतसम्मदः ।
तत्रतत्र पथि पथ्यविभ्रमः पर्वतादवततार सर्वधीः ॥ ९.५ ॥

वानरेंद्र इव तीर्णवारिधिः वासुदेव इव रत्नराजवान् ।
भीमसेन इव सूनवर्यहृन्निर्वृतिं स्वजनमानिनाय सः ॥ ९.६ ॥

अग्निशर्ममुखपंचषैर्द्विजैः अन्नमाहृतमलं पृथक् समम् ।
कृत्स्नमाददयमित्यविस्मयः कृत्स्नमत्तुमलमेष हि क्षये ॥ ९.७ ॥

व्यासदेवहृदयातिवल्लभं वासुदेवमगणय्यसद्गुणम् ।
साधयत् सकलदोषवर्जितं ज्ञानभक्तिदमनंतसौख्य दम् ॥ ९.८ ॥

उक्तमुक्तमभिधेयमुत्तमं वेदवाक्यमनुवादयन्मुहुः ।
व्यंजयत् स्मृतिवचोभिरंजसा तस्य चार्थमतियुक्तयुक्तिमत् ॥ ९.९ ॥

बालसंघमपि बोधयद् भृशं दुर्निरूपवचनं च पंडितैः ।
अप्रमेयहृदयं प्रसादवत् सौम्यकांति च विपक्षभीषणम् ॥ ९.१० ॥

अस्तदूषणमवंध्यभाषणं लक्षितं सकललक्षणैः समम् ।
माननीयमपि नाकिनायकैः रूपमन्यदिव धन्यमात्मनः ॥ ९.११ ॥

एकविंशतिकुभाष्यदूषकं ब्रह्मसूत्रगणभाष्यमद्भुतम् ।
अप्यदूष्यमतनोदनंतधीः भूतभाविभवदात्मभिः क्वचित् ॥ ९.१२ ॥

गांगमंगलतरंगभंगदप्रांतसुश्रिहरिवेश्मकृत्समः ।
यद्गतैकतमवर्णलेखकः सत्यतीर्थ इह भाष्यमालिखत् ॥ ९.१३ ॥

तत्र देवमभिवंद्य यातवान् स्वामिनो वचनगौरवाद् द्रुतम् ।
सानुगो विविधभूरतीत्य गोदावरीतटमगादलेशधीः ॥ ९.१४ ॥

प्राज्ञवित्तमयमाप्तुमागतैः पंडितैर्द्विनवशाखिभिः श्रुतीः ।
प्रस्तुता अभिदधौ परीक्षकैः षट् च तत्र समयानखंडयत् ॥ ९.१५ ॥

ते पृथक्पृथगमुं स्वशाखया दर्शनेन च परीक्ष्य निर्जिताः ।
सर्ववित् त्वमसि मुख्यतः कवे नास्ति ते सदृश इत्यथाब्रुवन् ॥ ९.१६ ॥

यस्त्रयीसकलपक्षशिक्षकः तत्र संसदि वरिष्ठसम्मतः ।
शोभनोपपदभट्टनामकः पूर्णसंख्यमनमन्मुहुर्मुदा ॥ ९.१७ ॥

यस्तु तार्किकशिखामणिः सुधीः वर्तमानसमयान् निराकरोत् ।
वेदभारतपुराणनिष्ठितो भाष्यमेतदशृणोत् स मध्वतः ॥ ९.१८ ॥

नापरेषु रतिमाययौ क्वचिद् भाष्यमद्भुतमिदं स शुश्रुवान् ।
नारविंदमकरंदमाप्तवान् अच्छपिच्छ इव वांछतीतरत् ॥ ९.१९ ॥

तत्रतत्र स सुसभासु भासुरो नंदितीर्थसमयोक्तयुक्तिभिः ।
वादिनो विशकलय्य तान् समाक्रम्य वाचमुचितामुदाहरत् ॥ ९.२० ॥

चूर्णकृद्विविधशंखचूर्णकः चूर्णनाय बहुधाऽप्यशक्नुवन् ।
अत्यजद् विफलधीः प्रदक्षिणा वर्तवारिजमनर्घ मप्यहो ॥ ९.२१ ॥

अप्रमेयमतिशास्त्रमीदृशं यस्त्यजत्युपनतं सुदुर्लभम् ।
तस्य तुल्यमतिरेष दुर्जनो नाथवाऽस्य सदृशोऽस्ति नीचधीः ॥ ९.२२ ॥

कोऽपि तं गुणविशेषविच्च विक्रीय भूरिधनमाप पूरुषः ।
न ह्यनर्घगुणमूल्यमाप्यते भाग्यदैवमिह योग्यतानुगम् ॥ ९.२३ ॥

व्यक्तमुन्नतिमितोऽप्ययं जनः तस्य यन्न लभतेखिलं फलम् ।
स्तोकमानसतया ततो व्रजेत् तस्य हंत पुरुषस्य तुल्यताम् ॥ ९.२४ ॥

क्रीतवान् नरपतिर्महादरं सादरं पुनरुदारचेष्टितः ।
अर्चयन् सततमाप संपदो या न ता वचनचित्तगोचराः ॥ ९.२५ ॥

शास्त्रकल्पकतरोरमुष्य कः प्राप्नुयात् सकलमप्यहो फलम् ।
यस्तमुत्तमगुणं विडंबयेद् इत्युदीर्य स जनानरंजयत् ॥ ९.२६ ॥

नेदृशैः कविभिरेव केवलं हंत पूज्यचरणोऽभ्यपूज्यत ।
शर्वशक्रगुरुपूर्वदैवतैः अप्यलं सुसमयोद्गमोत्सवे ॥ ९.२७ ॥

निम्नभूरिव सतीः प्रजा व्रजन् वारिदर्तुरशनैरपूरि सः ।
प्राज्यतापहरदर्शनांबुना तुंगदेशमिव दुर्जनं तु नो ॥ ९.२८ ॥

कर्मभिः सकललोककौतुकैः मानितः पथि जनैः समागतः ।
सन्ननाम शिवनामकीर्तनं राजतासनपुरे विराजितम् ॥ ९.२९ ॥

अच्युतप्रमतिरच्युतप्रियं तं दशप्रमतिमागतं तदा ।

वंदमानमवलोक्य यां मुदं प्राप्तवांस्तदवधिर्न विद्यते ॥ ९.३० ॥

प्रीतिमार्ययतिरुत्तमां पुरा प्रेषिताप्रतिमभाष्यदृग् ययौ ।
अप्यतोऽतिशयिनीं शुचिस्मितं तं विलोक्य सुचिराद् दिदृक्षितम् ॥ ९.३१ ॥

पूर्णदृष्टिजलधेर्गृहीतवान् भाष्यसंज्ञममृतं सुखावहम् ।
चित्रमेष यतिराड्घनाघनो ग्राहयंश्च मनुजान् मुमोच नो ॥ ९.३२ ॥

सानुनीतिरथ नीतिमानयं भाष्यसद्गुणगणानवर्णयत् ।
शोभनाय गुरवे स्वभावतः कालतः कुमतलीनबुद्धये ॥ ९.३३ ॥

उक्तिभिस्तमसकृत् सुयुक्तिभिः बोधयन् बहळधीः प्रसंगतः ।
स्थेयसो भिषगिवास्य हृद्गतं मूलदोषमरुचेरचिंतयत् ॥ ९.३४ ॥

दक्षपक्षविहृतेन ताडयन् भीषयन् समधिकस्वरश्रिया ।
हंसराट् कलिमलं निराकरोदेकदृष्टिमिव मानसाद् गुरोः ॥ ९.३५ ॥

निष्कळंकमिव चंद्रमंडलं पुंडरीकमिव फुल्लतां गतम् ।
वारि शारदमिव प्रसादवत् चित्तमच्युतमतेर्भृशं बभौ ॥ ९.३६ ॥

आननंद स हि मध्वशास्त्रमाकर्णयन् कुसमयाग्रही पुरा ।
मोहपीतलवणोदको मुहुः प्राक् पिपासुरमृतं पिबन्निव ॥ ९.३७ ॥

विस्तृतांतरवियत्पदौ यती आस्यतां सुसमयप्रकाशनात् ।
तौ यथा विधुरवी अहो अहोरात्रमप्युरुतमो नृमोहकम् ॥ ९.३८ ॥

सज्जनान् सह महादरेण नॄन् पापिनां प्रकृतितोऽप्रियाकृति ।
दारुणाघगणदारणं स्म स ग्राहयत्यपि सुदर्शनद्वयम् ॥ ९.३९ ॥

नन्वनन्यशरणात्मनां सतां सिद्धिविघ्नमुखदोषभेषजम् ।
ऐच्चदच्चलदयोदयादयं रूप्यपीठपुरगः कदाचन ॥ ९.४० ॥

गोपिकाप्रणयिनः श्रियःपतेः आकृतिं दशमतिः शिलामयीम् ।
शिष्यकैस्त्रिचतुरैर्जलाशये शोधयन्निह ततो व्यगाहयत् ॥ ९.४१ ॥

स्पर्शनाद्भगवतोऽतिपावनात् सन्निधानपदतां गतां हरेः ।
त्रिंशदुद्यतनरैः सुदुर्धरां लीलयाऽनयदिमामसौ मठम् ॥ ९.४२ ॥

मंदहासमृदुसुंदराननं नंदनंदानमतींद्रियाकृतिम् ।
सुंदरं स इह सन्न्यधापयद् वंद्यमाकृति शुचिप्रतिष्ठया ॥ ९.४३ ॥

मानिनोऽपि हि वशीचकार यो दैवतप्रतिभयाऽऽत्मनः खलः ।
यायजूकगुणमात्मनः स्मरन् यो जराघटितगोत्र उच्यते ॥ ९.४४ ॥

आत्मनः प्रियतमक्रतोरमुं पापपूरुषमवेत्य घातुकम् ।
तं निरस्य जनमप्यथाहितं सर्वभूधरसमर्थपूर्वकम् ॥ ९.४५ ॥

विश्वविस्मयकरः स्वतेजसा वंद्यमानचरणः पुनर्जनैः ।
चित्रदिग्विजयकीर्त्यकीर्तिमान् मोदयन्ननुदिनं निजाः प्रजाः ॥ ९.४६ ॥

वासुदेवदयितो महिष्ठधीः वासुदेवमथ साध्वयाजयत् ।
धर्मसूनुमिव धार्मिकं पुरा भीममूर्तिरयमेव भूसुरम् ॥ ९.४७ ॥

याज्यया समुचितानुवाक्यया सप्रवर्ग्यविभवैरभिष्टवैः।
विश्ववेत्तुरनुजोऽत्र होतृतां प्राप्य दैवततीरतोषयत् ॥ ९.४८ ॥

स प्रयुज्य निशिता निशातधीः वैश्वदेववरशस्त्रसंततीः ।
राक्षसासुरनिरासकृत् सुरान् वीरवर्य इव भागमापयत् ॥ ९.४९ ॥

वायुना त्रिरपि पूर्वपायिना सर्वदैवतजिता तरस्विना ।
योऽपरोक्षवपुषाऽप्यपेक्षितः कोऽत्र वर्णयति तं महाक्रतुम् ॥ ९.५० ॥

ब्रह्मवेदननिविष्टचेतसां कर्म तत्र करणांतरं भवेत् ।
ज्ञापयन्निति परात्मवेदकः कर्म धर्ममपि स ह्यचीकरत् ॥ ९.५१ ॥

यानियानि चरितानि यानियानीरितानि च मनोहराण्यहो।
तानितानि च वितानिचेतसो विश्वविस्मयकराणि भांति हि ॥ ९.५२ ॥

सरस्वतीर्वृत्तिकरीः शरीरिणां अतीत्य बह्वीः समतीतगोत्रकः ।
पुरेव कृष्णप्रियमापदश्रमं पृथुप्रबोधः पुनरुत्तमाश्रमम् ॥ ९.५३ ॥

सहभोगमनन्यलभ्यमस्मै हनुमद्रूपवते ददौ पुरा हि ।
अनवेक्ष्य परं स्वभीष्टकर्त्रे प्रतिदातुं हरिरैधयत् तमेव ॥ ९.५४ ॥

प्रणम्य गुरुमादरादथ नियोगतो योग्यतः
स तस्य जगतां हितं विदधतो गतः सानुगः ।
महिष्ठहृदयो महामहिमसिंधुरानंदतो
निजैरभिगतोऽनमद् रजतपीठवासं हरिम् ॥ ९.५५ ॥

॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत
नारायणपंडिताचार्यविरचिते श्रीमध्वविजये
आनंदांकिते नवमः सर्गः ॥